* अथ *

# मूलशान्तिः

## प्रारम्भः

प्रकाशक–फर्म बाबू बैजनाथ प्रसाद बुकसेलर,
राजादरवाजा बनारस सिटी । सन् १९३३

श्रीगणेशायनमः ॥ अथ मूलशान्तिविधिः ॥ प्रथमतः शतच्छिद्रेण सप्तविंशतिच्छिद्रेण वा करकेण यजमानः सपत्नीकः सबालकः स्नानं कुर्यात्, तस्मिन्नेव करके सप्तधान्यं सप्तमृत्तिका, शतौषधी मूलं पञ्चरत्नानि, सप्तविंशतितीर्थजलानि, निक्षिप्य, सप्तधान्यानि—'श्यामाकयवगोधूममुद्गमाषप्रियङ्गवः । धान्यानि च समाख्याता व्रीहयः सप्तसूरिभिः ॥ अथसप्तमृत्तिका—'अश्वस्थानाद्गजस्थानाद्वाल्मीकात्सङ्गमात् ह्रदात् । राजद्वाराच्च गोष्ठाच्च मृदमानीय निक्षिपेत ॥ अथ शतौषधयः—'शतौषधीनां दुष्प्राप्तौ क्षिपेदेकां शतावरीम् ॥, अथ पञ्चरत्नानि 'माणिक्यं मौक्तिकं हेमं प्रबालं रजतादिकम् । पंचरत्नाङ्गमित्येतत् सर्वं शान्तिकरं परम् ॥, सप्तविंशतिवृक्षस्य पत्रिकाः करके निक्षिप्य, वंशपात्रोपरिन्यस्तसच्छिद्रकलशोदकैः । कम्बलान्तर्हितं कृत्वास्नापयेद्दम्पती शिशुम् ॥ स्नानान्ते कलशस्थापनं

मु० संकल्पं कुर्य्यात । अद्येत्यादि देशकालौ स्मृत्वा ममामुकनक्षत्र वि.
१ जातस्य बालकस्य गण्डजानित दोषोपशान्त्यर्थम् अमुकशान्ति-
महं करिष्ये ॥ ततो यज्वा आचार्यादीन् पंच वा सप्त ब्राह्मणान्
वृणुयात । ततः स्वस्तिपुण्याहवाचनं विधाय, पूर्वस्यांदिशि
कलशस्थापनं कृत्वा, तत्र गणेशादीन् संपूज्य, ईशानादिच
तुष्कोणेषु चतुरो मृन्मयान् कलशान् धृत्वा, तत्र प्रथमकलशे
ब्रह्मपूजनं, द्वितीये विष्णुपूजनं, तृतीये रुद्रपूजनं, चतुर्थे
इन्द्रपूजनं, स्वर्णमयमूलपुरुषपूजनं, ततो नवग्रहपूजनं, लोक-
पालानाम्, दिक्पालानाम्, अधिदेवतायाः, प्रत्यधिदेवतायाः
पूजनम् । अथ पूजनविधिः । प्रथमतः स्वस्त्ययनं, भूरसीनि
मन्त्रेण भूमिस्पर्शनं, मानस्तोके इति मन्त्रेण नमस्कारः, आजिघ्र
इति मन्त्रेण कलशस्पर्शः, सहस्रधुंचोरुधार इति मन्त्रेण जलं १
याः फलानीति मन्त्रेण पूगीफलं, हिरण्यगर्भेति मन्त्रेण द्रव्यम्

अम्बेअम्बालिकेति मन्त्रेण पल्लवं, धान्यमसीति मन्त्रेण धान्यम् अग्निर्ज्योतिरिति मन्त्रेणदीपम् अथप्रातिज्ञ संकल्पंकुर्यात् तत्र गणानान्त्वेति मन्त्रेण गणपतिपूजनं, गन्धपुष्पधूपदीपनैवेद्य ताम्बूलपूगीफलद्रव्यैर्गणपतिं पूजयेत् । श्रीश्चते इति मन्त्रेण गन्धादिना गौरीपूजनं । पश्चान्नवग्रहलोकपालदिक्पालानाम्, अधिदेवताश्च पूजनम्, तत्पश्चात् चतुर्थ कलशेषु क्रमेण ब्रह्मादिदेवतापूजनम्, तत्र प्रथमकलशे ब्रह्मयज्ञानमिति मन्त्रेण ब्रह्मापूजनम्, द्वितीयकलशे विष्णोरराडिति मंत्रेण विष्णुपूजनम् तृतीय कलशे नमः शम्भवायेति मन्त्रेण रुद्रपूजनं, चतुर्थ कलशे त्रातारमिन्द्र इति मन्त्रेणेन्द्रपूजनं, तत्र प्रथमकलशो-परिआम्रपल्लवं, धान्यदीपं, चतुर्थकलशोपरि प्लक्षपल्लवं, धान्य दीपं, गंधपुष्पधूपदीपनैवेद्यताम्बूलपूगीफलद्रव्याणि दद्यात्, एवं प्रकारेण चतुः कलशपूजनम्, ततो होमः । तत्राऽऽचार्य्य

संकल्पं कुर्य्यात । अद्येत्यादि देशकालौ स्मृत्वा ममामुकनक्षत्र
१ जातस्य बालकस्य गण्डजानित दोषोपशान्त्यर्थम् अमुकशान्ति-
महं करिष्ये ॥ ततो यज्ञा आचार्यादीन् पंच वा सप्त ब्राह्मणान्
वृणुयात । ततः स्वस्तिपुण्याहवाचनं विधाय, पूर्वस्यांदिशि
कलशस्थापनं कृत्वा, तत्र गणेशादीन् संपूज्य, ईशानादिच-
तुष्कोणेषु चतुरो मृन्मयान् कलशान् धृत्वा, तत्र प्रथमकलशे
ब्रह्मपूजनं, द्वितीये विष्णुपूजनं, तृतीये रुद्रपूजनं, चतुर्थे
इन्द्रपूजनं, स्वर्णमयमूलपुरुषपूजनं, ततो नवग्रहपूजनं, लोक-
पालानाम्, दिक्पालानाम्, अधिदेवतायाः, प्रत्यधिदेवतायाः
पूजनम् । अथ पूजनविधिः । प्रथमतः स्वस्त्ययनं, भूरसीनि-
मन्त्रेण भूमिस्पर्शनं, मानस्तोके इति मन्त्रेण नमस्कारः, आजिघ्र
इति मन्त्रेण कलशस्पर्शः, सहस्रधुंचोरुधार इति मन्त्रेण जलं १
याः फलानीति मन्त्रेण पूगीफलं, हिरण्यगर्भेति मन्त्रेण द्रव्यम्

अम्बेअम्बालिकेति मन्त्रेण पल्लवं, धान्यमसीति मन्त्रेण धान्यम् अग्निर्ज्योतिरिति मन्त्रेणदीपम् अथप्रतिज्ञ संकल्पंकुर्यात् तत्र गणानान्त्वेति मन्त्रेण गणपतिपूजनं, गन्धपुष्पधूपदीपनैवेद्य ताम्बूलपूगीफलद्रव्यैर्गणपतिं पूजयेत् । श्रीश्चते इति मन्त्रेण गन्धादिना गौरीपूजनं । पश्चान्नवग्रहलोकपालादिक्पालानाम्, अधिदेवताश्च पूजनम्, तत्पश्चात् चतुर्थ कलशेषु क्रमेण ब्रह्मादिदेवतापूजनम्, तत्र प्रथमकलशे ब्रह्मयज्ञानमिति मन्त्रेण ब्रह्मापूजनम्, द्वितीयकलशे विष्णोरराडिति मंत्रेण विष्णुपूजनम् तृतीय कलशे नमः शम्भवायेति मन्त्रेण रुद्रपूजनं, चतुर्थ कलशे त्रातारमिन्द्र इति मन्त्रेणेन्द्रपूजनं, तत्र प्रथमकलशो· परिआम्रपल्लवं, धान्यदीपं, चतुर्थकलशोपरि प्लक्षपल्लवं, धान्य दीपं, गंधपुष्पधूपदीपनैवेद्यताम्बूलपूगीफलद्रव्याणि दद्यात्, एवं प्रकारेण चतुः कलशपूजनम्, ततो होमः । तत्राऽऽचार्य्य

वरणम् । अभ्यङ्गात्रयवं शान्तं सदाचारैः प्रतिष्ठितम् । आचार्यं वरयेत्तत्र वस्त्राभरणैरपि । स्वस्तिवाचनमादौ च कृत्वा शर्षप मन्त्रणम् । प्राच्यादौ मन्त्रपठनाद्रक्षाकङ्कणबंधनम् । आचार्यं वरयेत्तत्र वस्त्राभरणैरपि । तत्रवाक्यं, पूर्ववद्देशकालवाक्यानन्तरंममाभिः नवकुमारस्यजन्मसमये अमुकनक्षत्रजनितगण्डान्तदोषोपशमनार्थं होमकर्मणि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्द्रव्याक्षतवस्त्रयज्ञोपवीतनारिकेल फलताम्बूलकुण्डलमुद्रिकाभिराचार्यत्वेन त्वामहं वृणे, अतोऽस्मीत्याचार्यो ब्रूयात्, यथाविहितं कर्म कुरु इति यजमानः करवाणीत्याचार्यः, द्वौ मिलित्वा व्रतेनदीक्षामितिमंत्रं पठताम्, तत्राऽऽचार्यः हस्ते गात्रचतुरस्रामितिप्रकारेणाग्निस्थापयेत्, तत्रोऽऽचार्यः प्रतिज्ञा कुर्यात्, अद्येत्यादि वाक्यं कृत्वा गण्डदोषशमनं होमकर्माहं करिष्ये ॥ तत्राचार्यो देवताभिध्यानं कुर्यात्, तत्र प्रजापतिम्

अग्निं, सोमं, अग्निं, स्विष्टकृतमाज्येनाहंयक्ष्ये, अग्नेर्दक्षिणतो ब्रह्मासनम्, आदौ ब्राह्मणं संपूज्य, ततोद्रव्याक्षतताम्बूलवासो युगान्यादाय, ॐ अद्येत्यादि वाक्यं कृत्वा मम यजमानस्याभिनवकुमारस्य जन्मसमये अमुकनक्षत्र जनित गण्डान्त दोष शमनार्थकहोमकर्माणि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्द्रव्याक्षतवासोभिर्ब्रह्मत्वेन त्वामहं वृणे वृतोस्मीति प्रतिवचनं यथाविहितं कर्म पश्येति यजमानः, पश्यामीति ब्रह्मा ब्रूयात्, एवंप्रकारेण समिदाज्यतिलचरूणां होमार्थमाचार्यं वृणुयात ब्रह्मासनोपरि ब्रह्मणमपवेश्य, प्रणीतासनोपरि प्रणीतापात्रं निधाय, तदुपरि कुशराच्छाद्य, ब्रह्मणो मुखमवलोक्य, ततः परिस्तरणम्, एकाशीतिदर्भदलानि वामहस्तेनगृहीत्वा, तेषां चतुर्भागान् कृत्वा, प्रथमं भागमादाय आग्नेयादीशानान्तं, द्वितीय भागमादाय ब्रह्मणोऽग्निपर्यन्तं, तृतीय भागमादाय नैर्ऋत्या-

द्वायव्यान्तं, चतुर्थं भागमादाय अग्नितः प्रणीतापर्यन्तं ततो
ऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं त्रीणि दर्भदलानि,
पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयं, प्रोक्षणीपात्रम्,
आज्यस्थालीं, चरुस्थाली, संमार्जनकुशाः उपयमनकुशाः
समिधस्तिस्रःस्वदिरोहस्तमात्रःस्रुवः स्रुगाज्यंगव्यं, षट्पञ्चाशद-
धिकमुष्टिशतद्वयावच्छिन्नतण्डुलपूर्णपात्रं, दक्षिणा वरो गौः,
पवित्रच्छेदनकुशानां पूर्वं पूर्वदिशि क्रमेणाऽऽसादनम्, ततः
पवित्रच्छेदनकुशैः पवित्रे छित्वा, तान् अपास्य सपवित्रकरेण
प्रणीतोदकंत्रिः प्रोक्षणीपात्रे निधाय, अनामिकाङ्गुष्ठाभ्यामुत्त-
राग्रं पवित्रं गृहीत्वा त्रिरुत्पवनं, ततः प्रोक्षणीपात्रंवामकरे
निधाय, अनामिकाङ्गुष्ठाभ्यां गृहीतपवित्रेण तज्जलं किंचित्
त्रिरुत्क्षिप्य, प्रणीतोदकेन प्रोक्षणीमभिषिञ्च्य, प्रोक्षणीजलेना-
ऽऽसादितवस्तुसेचनम् अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रे निद-

ध्यात् । तत आज्यस्थाल्यामाज्यं निरूप्याऽधिश्रयणं, ततः कुशं प्रज्वाल्याऽऽज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वन्हौ प्रक्षिपेत् । श्रुवंत्रिः प्रताप्य संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः श्रुवं संमृज्य, प्रोक्षण्युदकेनाऽभ्युक्ष्य, पुनस्त्रिः प्रताप्य, दक्षिणतो निदध्यात् । ततः आज्यमग्नेः प्रदक्षिणं कारयित्वा पुनस्तत्र स्थापयेत् । प्रोक्षणीवदुत्पवनम्, अवेक्ष्य सत्यपद्रव्ये तन्निरसनम्, पुनः प्रोक्षणीवदुत्पवनम्, उत्थायोपयमनकुशान् वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्तः समिधः प्रक्षिपेत् । तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रोपरि पवित्रे धृत्वा पातितदक्षिणजानुर्ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाऽऽज्याहुतीर्जुहुयात् । तत्तदाहुत्यनन्तरं श्रुवावस्थितं हुतशेषं प्रोक्षणीपात्रे प्रक्षिपेत, प्रथमं कुशत्रयादिकमादाय

ॐ अद्येत्यादि वाक्यं कृत्वा अमुकशर्मणो यजमानस्याभि-
नवकुमारस्य जन्मसमये अमुकनक्षत्रजनित गण्डदोषोपश-
मनार्थं समिदाज्यतिलचरूणां प्रत्येकमष्टोत्तरसहस्रमष्टोत्तरश-
तं वा तत्तन्मन्त्रेणब्राह्मणद्वारा हवनमहंकरिष्ये, इतिसंकल्पः।
ॐ नमः प्रजापतयेस्वाहा इत्यादिहोमानन्तरं सूर्यादिनवग्रह
ग्रामदेवतान्तं घृतसमित्तिलचरूणां प्रत्येकम् एकामाहुतिं
दद्यात्। यन्नक्षत्रं तद्दैवतस्मरणपूर्वकं होमं कुर्यात्। ॐ अश्वि-
नोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि, सरस्वत्यै, भैषज्येन
वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रियस्येंद्रियेण बलायश्रियै यशसेभि-
षिञ्चामि स्वाहा, इति अश्विनीनक्षत्रमंत्रः॥ ॐ पितृभ्यः स्वधा-
यिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपि-
तामहेभ्यः स्वधायिभ्यः स्वधानमः स्वाहा॥ इति मघानक्षत्र
मन्त्रः॥ ॐ एषते निर्ऋते भागस्तज्जुषस्व स्वाहाऽग्निनेत्रेभ्यो

देवेभ्यः पुरः सद्भ्यः स्वाहा, यमनेत्रेभ्यो दक्षिणासद्भ्यः स्वाहा, विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा, मित्रावरुण नेत्रेभ्यो वामरुन्नेत्रेभ्यो वा देवेभ्यः तत्तरासद्भ्यः स्वाहा, सोम नेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा इतिमूलनक्षत्र मन्त्रः। ॐ पूषन्तवव्रते वयन्नरिष्येम कदाचन स्तोतारस्त इह स्मसि स्वाहा इतिरेवतीनक्षत्र मंत्रः॥ ॐनमोस्तु सर्पेभ्योयेकेच पृथ्वी मनु ये अन्तरिक्षे ये दिवितेभ्यः सर्पेभ्योनमः स्वाहा इत्याश्लेषानक्षत्रमन्त्रः॥ ॐ सजोषाइन्द्रसगणो मरुद्भिः सोमं पिववृत्रहाशूरविद्वान्। जहिशत्रूँरपमृधोनुदस्वाहा भयं कृणुहिविश्वतोनः स्वाहा इति ज्येष्ठानक्षत्रमन्त्रः॥ अथ स्विष्टकृद्धोमः ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृतेततः संश्रवप्राशनम्। ततः आचम्य पूर्णपात्रं दद्यात्। ॐ अद्येत्यादिवाक्यं कृत्वा कृतैतद्धोमकर्माणि कृताकृतावेक्षणरूप ब्रह्मकर्मप्रतिष्ठार्थ-

मिदं पूर्णपात्रं प्रजापतिर्दैवतं ब्रह्मणे दक्षिणातुभ्यमहं संप्रददे
इति दक्षिणां दद्यात् । स्वस्तीति प्रतिवचनम् । ॐ सुमित्रि-
यान आप ओषधयः सन्तु इति पवित्रं गृहीत्वा शिरः संमृज्य
दुर्मित्रियास्तस्मै सन्त योऽस्मान्द्वेष्टियञ्च वयं द्विष्मः इतिप्रणी-
तापात्रं न्युब्जीकुर्यात् । तत आस्तरणक्रमेण बर्हिरानीय घृते
नाभिघार्य्य हस्तेनैव जुहुयात् । ॐ देवा गातु विदो गातुंवि-
त्वागातुमित । मनसस्पत इमं देव यज्ञ ँ स्वाहा वातेधाः स्वाहा
ततः क्षेत्रपालादिभ्यो बलिं दद्यात । दधितण्डुलमाषसहितं
बलिम् इन्द्रमुद्दिश्य इदं पठेत्, भो इन्द्रसाङ्ग सवाहन सपार्षद
दधितण्डुलमाषादियुतं बलिं गृहाण, दीपेन पश्य, यजमान
सपत्नीकं सबालकंरक्ष चास्याभ्युदयं कुरुइत्युक्त्वाइदमाचमनं
तुभ्यं नमः इत्युक्त्वा तत्राऽचमनजलं त्यजेत् । एवं सर्वत्र
वाक्यं कर्तव्यम् । अग्नयेयमनिर्ऋतये वरुणाय वायवेकुबेराय

ईशानाय अनन्ताय तत्राचमनार्थं सर्वेभ्यो जलं, ज्वलद्दीपं च दद्यात् । मृन्मयपात्रे पत्रपुटके वा दधिमाषान्नसिन्दूरकं जल दीपद्रव्येण बलिं प्रकल्प्य यजमानशरीरे भ्रामयित्वा, यानीह भूतानि वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् । अन्यत्र वासं परिकल्पयन्तु क्षमंतु ते चैव नमोस्तु तेभ्यः ॥ अनेन मंत्रेण ब्राह्मणहस्तेन प्रस्थापयेत् । क्षेत्रपालदीपसंकल्पः, ॐ अद्येत्यादि वाक्यं कृत्वा अस्मिन् हवनयज्ञे यज्ञफललुम्पकनि-वारणार्थं यज्ञप्रतिष्ठासिध्यर्थम् अमुंदीपबलिंक्षेत्रपालायदातुम-हं सृजे । ततो गोदानम्, ततो नारिकेलबदरीफलपत्रपुष्पाक्षत घृतैः यजमान आचार्य्यदक्षिणहस्तस्पृष्टश्रुवेण पूर्णाहुतिंकुर्यात् । ॐ मूर्धानं दिवो अरतिं पृथिव्यावैश्वानरमृत आजातमग्निम् कवि ँ संम्राजमतिथि जनानामासन्नापात्रं जनयन्त देवाःस्वा-हा । ततः श्रुवेण भस्माऽऽनीय ललाटादौत्र्यायुषंकुर्यात् । ततो

भूतबालिंदद्यात् । ॐ आद्याः स्वकर्मकाश्चैव भूताः प्रेतादिकाः स्थिताः । प्रसन्नाः परितुष्टाश्च ते गृह्णन्तु इमंबलिम् ॥ अथ छाया दानं । छायादानं कांस्यपात्रं पलैः षोडशभिर्बुधैः । पूर्णं घृतं तुदातव्यं गण्डदंषोपशान्तये । तत्र मन्त्रः । आज्यत्स्वं सर्वदेवानां प्रियः स्वस्तिकरः शुचिः । त्वयि संक्रान्तबिम्बोयं बालो मूलर्क्षसंभवः ॥ सर्वदोषपरित्यक्तो जायतां निरुपद्रवः ॥ ततोऽपमृत्युशमनार्थं छायादानं दत्वा बालकस्य मुखावलोकनं कुर्यात् । तत्पश्चात् गोमखप्रसवं कुर्यादापोहिष्ठादिपार्जितः ॥ ॐ देवस्यत्वा सवितुः अश्विनोर्भैषज्येन शिरो मे जिह्वा मे बाहूमे पुष्टिर्मस्तुष्टिर्मेनाभिर्मे । गावः कामप्रदातारो गावो लोकस्यमातरः । गोमुखान्निःसृतो बालो गोमुखश्वासमार्जितः ॥ पुनर्जात इति ध्यायन् वंशपात्रद्वयाम्बरात् । गृहीत्वा बालकं पश्चादापोहिष्ठादिमार्जितः । अभिषिक्तास्ततो बालो मूल

गरुडांतसंभवः ॥ सर्वदोष परित्यक्तो जायते निरुपद्रवः । तां गां दद्यात् प्रयत्नेन कम्बलं च द्विजायते । प्रतिमां च ततो दद्यादाचार्याय समाहितः । अथ चतुःकलशजलेन यजमानं सपत्नीकं सबालकम् अभिषिञ्चेदाचार्यः । तत्रमंत्रः । सुरा स्त्वामभिषिञ्चन्तु ये च बृद्धाः पुरातनाः । ब्रह्मा विष्णुश्च रुद्रश्च संध्याश्च समरुद्गणाः । आदित्यो वसवो रुद्रा विश्वे- देवाः सनातनाः । लोकपालाः प्रयच्छंतु मङ्गलानि श्रियंयशः । अश्विनौ चाभिषिञ्चन्तु देवास्त्वदितिदेवताः सिद्धिः सरस्वती लक्ष्मीः कीर्तिर्मेधा धृतिः प्रिया । सिनीवाली कुहूश्चैव कद्रुश्च बिनता तथा । नक्षत्राणि मुहूर्तानि अहोरात्राणि सिन्धवः । संवत्सरा दिनेशाश्च कलाः काष्ठाः क्षणा लवाः । सप्तैते ऋषय- श्चैव सागराः सुदृढव्रताः । मरीचिरत्रिश्च्यवनः पुलस्त्यः क्रतु- रङ्गिराः । भृगुः सनत्कुमारश्च सनकश्च सनंदनः । सनातनश्च

दक्षश्च योगिब्रह्मर्षयोऽमलाः । जाबालिः कश्यपो धौम्यो
विष्णुश्चैव सनातनः । दुर्वासाश्च ऋषिश्रेष्ठः कण्वः कात्याय-
नस्तथा । मार्कण्डेयो दीर्घतमः शुनःशेफःसुलोचनः । वसिष्ठश्च
महातेजा विश्वामित्रः पराशरः । द्वैपायनो भृगुश्चैव देव-
राजा धनञ्जयः । एते चान्ये च ऋषयो देवव्रतपरायणाः ॥
सशिष्यास्त्वाभिषिञ्चन्तु सदाराः सुमहाव्रताः । पर्वतास्तरवो
वल्यः पुण्यान्यायतनानि च । ऐरावतादयो नागाः सप्तसप्तहया
शुभाः । एते चान्येपि च वराः सुराः संपद्विवर्द्धनाः । योऽसौ
वज्रधरो देवो आदित्यानां प्रभुर्मतः । सहस्रनयनः शक्रो मूल-
दोषं व्यपोहतु । मखंयः सर्वदेवानां सप्तार्चिरमितद्युतिः । उक्त
नक्षत्रसंभूतमग्निदोषं व्यपोहतु । यः साक्षी सर्वभूतानां महा
महिषवाहनः । उक्तनक्षत्रसंभूता यमः पीडा व्यपोहतु ।
निर्ऋतिः कौणपो देवमलयानलसन्निभाः । खंगव्यग्रोतिभीमश्च

व्यपोहतु। प्राणरूपो हि लोकानां सदा कृष्णमृग·
। पवनो मूलसंभूतां पीडां सर्वां व्यपोहतु। योऽसौ
निधिपतिर्देव खड्गशूलगदाप्रियः। उक्तनक्षत्रसंभूतमग्निदोषं
व्यपोहतु। योऽसौ निधिपतिर्देवः खड्गशूलगदाप्रियः। उक्त
नक्षत्रजां पीडां धनदोऽत्र व्यपोहतु। वृषध्वजः शूलधरो भ·
वानीपतिदेवताः। बालनक्षत्रजां पीडां स नाशयतु शङ्करः। त्रै·
लोक्ये यानि भूतानि जंगमस्थावराणि च। ब्रह्माविष्णुर्कयु·
क्तानि सर्वपापं हरन्तु वै। इति मन्त्रेण दम्पती शिशुमभिषेच·
येत्। ततो ब्राह्मणाय भूयसीं दद्यात्। तिलकं, मंत्रदानं, ग्रह
विसर्जनं। यान्तु देवगणाः सर्वे पूजामादायमामकीम्। इष्ट
कार्यस्य सिध्यर्थं पुनरागमनाय च॥

॥ इति मूलशान्तिः॥



दत्तश्च योगिब्रह्मर्षयोऽमलाः । जाबालिः कश्यपो धौम्यो विष्णुश्चैव सनातनः । दुर्वासाश्च ऋषिश्रेष्ठः कण्वः कात्यायनस्तथा । मार्कण्डेयो दीर्घतमः शुनःशेफःसुलोचनः । वसिष्ठश्च महातेजा विश्वामित्रः पराशरः । द्वैपायनो भृगुश्चैव देवराजा धनञ्जयः । एते चान्ये च ऋषयो देवव्रतपरायणाः ॥ सशिष्यास्त्वाभिषिञ्चन्तु सदाराः सुमहाव्रताः । पर्वतास्तरवो वल्यः पुण्यान्यायतनानि च । ऐरावतादयो नागाः सप्तसप्तहया शुभाः । एते चान्येपि च वराः सुराः संपद्विवर्द्धनाः । योऽसौ वज्रधरो देवो आदित्यानां प्रभुर्मतः । सहस्रनयनः शक्रो मूलदोषं व्यपोहतु । मखंयः सर्वदेवानां सप्तार्चिरमितद्युतिः । उक्त नक्षत्रसंभूतमग्निदोषं व्यपोहतु । यः साक्षी सर्वभूतानां महा महिषवाहनः । उक्तनक्षत्रसंभूता यमः पीडा व्यपोहतु । निर्ऋतिः कौणपो देवमलयानलसन्निभाः । खड्गव्यग्रोतिभीमश्च

ऋक्षदोषं व्यपोहतु । प्राणरूपो हि लोकानां सदा कृष्णमग-
प्रियः । पवनो मूलसंभूतां पीडां सर्वां व्यपोहतु । योऽसौ
निधिपतिर्देव खड्गशूलगदाप्रियः । उक्तनक्षत्रसंभूतमग्निदोषं
व्यपोहतु । योऽसौ निधिपतिर्देवः खड्गशूलगदाप्रियः । उक्त
नक्षत्रजां पीडां धनदोऽत्र व्यपोहतु । वृषध्वजः शूलधरो भ-
वानीपतिदेवताः । बालनक्षत्रजां पीडां स नाशयतु शङ्करः । त्रै-
लोक्ये यानि भूतानि जंगमस्थावराणि च । ब्रह्माविष्णुर्कयु-
क्तानि सर्वपापं हरन्तु वै । इति मन्त्रेण दम्पती शिशुमभिषेच-
येत् । ततो ब्राह्मणाय भूयसीं दद्यात् । तिलकं, मंत्रदानं, ग्रह
विसर्जनं । यान्तु देवगणाः सर्वे पूजामादायमामकीम् । इष्ट
कार्यस्य सिध्यर्थं पुनरागमनाय च ॥

॥ इति मूलशान्तिः ॥



मू० ८

पुस्तक मिलने का पता-

# बाबू बैजनाथ प्रसाद बुकसेलर,

राजादरवाजा बनारस सिटी।

वि.

पं० श्रीलाल उपाध्याय के प्रबंध से—श्री विश्वेश्वर प्रेस काशी में मुद्रित।

८

